# देवी-गीता ।

## प्रथमोऽध्यायः ।

॥ ॐ नमः परमदेवतायै ॥

॥ नारद उवाच ॥

ब्रूहि देव महेशान यथा सा परमेश्वरी ।
बभूव मेनका गर्भे पूर्णभावेन पार्वती ॥ १

श्रुतं बहुपुराणेषु ज्ञायतेपिच यद्यपि ।
जन्म कर्मादिकं तस्यास्तथापि परमेश्वर ॥ २

श्रोतुं समिच्छते त्वत्तोयतस्त्वं वेत्सि तत्वतः ।
तद्वदस्व महादेव विस्तरेण महामते ॥ ३

॥ श्रीमहादेव उवाच ॥

त्रैलोक्य जननी दुर्गा ब्रह्मरूपासनातनी ।
प्रार्थितागिरिराजेनततपसामेनयापिच ॥ ४

महोग्रतपसापुत्रीभावेन मुनिपुङ्गव ।
प्रार्थिताच महेशेन सती विरहदुःखिना ।
प्रययौमेनकागर्भे पूर्णब्रह्ममयीस्वयं ॥ ५

ततः शुभदिनेमेनाराजीव सदृशाननां ।
सुषुवेतनयां देवीं सुप्रभां जगदम्बिकां ॥ ६

ततोऽभवत् पुष्पवृष्टिः सर्वतोमुनिसत्तम ।
पुण्य-गन्धोववौवायुः प्रसन्नाश्चदिशोदश ॥ ७

अथाद्रिराजः श्रुत्वातुकन्यां जातां शुभाननां ।
तरुणादित्य कोट्याभां त्रिनेत्रां विश्वरूपिणीं ॥ ८

अष्टहस्तां विशालाक्षीं चन्द्रार्द्धकृत शेखरां ।
मेनेतां प्रकृति सूक्ष्मामाद्यां जातां स्वलीलया ॥ ९

तदाहृष्टमनाः शैलो विप्रेभ्यः प्रददौबहु ।
धनं वासांसि बहुधामुद्राणांच सहस्रशः ॥ १०

पुरं प्रति ययौसस्तु बन्धुभिः परिवेष्टितः ।
ततस्तमागतं ज्ञात्वागिरीन्द्रं मेनकातदा ।
प्रोवाच तनयां पश्य राजराजीव लोचनां ॥ ११

आवयोस्तपसाजातां सर्वभूत हितायच ।
ततः सोपि निरीक्षेत ज्ञात्वातां जगदम्बिकां ॥ १२

प्रनम्य शिरसाभूमौ कृताञ्जलि पुटः स्थितः ।
प्रोवाच वचनं देवीं भक्त्या गदगदया गिरा ॥ १३

॥ हिमवानुवाच ॥

कात्वं मातर्विशालाक्षी चिद्रूपा सनातनी।
नजाने त्वामहं वत्से यथावत् कथयस्व मां ॥ १४

॥ श्रीदेव्युवाच ॥

जानीहिमां परां शक्तिं महेश्वर कृताश्रयां।
सत्वमैश्वर्य्य·विज्ञान·मूर्त्तिं सर्वप्रवर्त्तिकां ॥ १५
सृष्टि स्थिति लयादीनां विधात्रीं जगदम्बिकां।
अहं सर्वान्तरस्थाच संसारार्णवतारिणी।
नित्यानन्दमयी नित्याब्रह्मरूप स्वरूपिणी ॥ १६
रहस्यै तपसा तुष्टा पुत्री भावेन लीलया।
जातातव गृहे तात बहुभाग्य वशात्तव ॥ १७

॥ हिमालय उवाच ॥

मातस्त्वं कृपयागृहेमम पुनर्जातासि
नित्यापियत्,
भाग्यंमेबहुजन्म कर्मनियतं सर्वं महत् पुण्यदं।
दृष्टा रूपमिदं [illegible] मूर्त्तिं तवान्यामपि,
मर्त्येऽस्मिन् [illegible]
नमः॥

॥ श्रीदेव्युवाच ॥

ददामि चक्षुस्तेदिव्यं पश्यमेरूपमैश्वरं ।
छिन्धिहृत् संशयं विद्धि सर्वदेवमयीं पित: ॥ १८

॥ श्रीमहादेव उवाच: ॥

इत्युक्ता तं गिरिश्रेष्ठं दत्वाविज्ञान लोचनं ।
स्वरूपंदर्शयामासदिव्यं माहेश्वरं तदा ॥ २०
शशिकोटिप्रभं चारुचन्द्रार्द्धकृत शेखरं ।
त्रिशूल वरहस्तञ्च जटामण्डित मस्तकं ॥ २१
भयानकं घोररूपं कालानलसमप्रभं ।
पञ्चवक्त्रं त्रिनेत्रञ्च नागयज्ञोपवीतिनं ॥ २२
द्वीपिचर्माम्बरधरं नागेन्द्रकृतभूषणं ।
एवं विलोक्य तद्रूपं विस्मितो हिमवान् पुन: ।
प्रोवाच वचनं मातरूप मन्यत् प्रदर्शय ॥ २३
तत: संहृत्यतद्रूपं दर्शयामासतत्क्षणात् ।
रूपमन्यत् मुनिश्रेष्ठ विश्वरूपा सनातनी ॥ २४
शरच्चन्द्रनिभं चारु मुकुटोज्ज्वलमस्तकं ।
शङ्खचक्र गदापद्म हस्तं नेत्रत्रयोज्ज्वलं ॥ २५

दिव्य माल्याम्बरधरं दिव्य गन्धानुलेपनं ।
योगीन्द्र-वृन्द संवन्द्य-सुचारु-चरणाम्बुजं ।
सर्वतः पाणिपादञ्च सर्वतोऽक्षि शिरोमुखं ॥ २६
दृष्ट्वातदेवं परमं रूपं सहिमवान् पुनः ।
प्रणम्यतनयां प्राह विस्मयोत्फुल्लमानसः ॥ २७

॥ हिमवानुवाच ॥

मातस्तवेदं परमं रूपमैश्वर्य्यसंश्रितं ।
विस्मितोऽस्मि समालोक्य रूपमन्यत् प्रदर्शय ॥ २८
त्वंयस्यपुत्रीसोशोच्यो धन्यश्च परमेश्वरि ।
अनुगृह्णीश्व मातर्मां कृपयात्वं नमोनमः ॥ २९

॥ श्रीमहादेव उवाच ॥

इत्युक्ता सा तदापित्रा शैलराजेन पार्वती ।
तद्रूपमपि संहृत्य दिव्यरूपं समादधे ॥ ३०
नीलोत्पलदलश्यामं तुलसीदामभूषितं ।
द्विनेत्रं द्विभुजं रक्त पङ्करूह पदाम्बुजं ॥ ३१
ईषत् सहासवदनं दिव्य लक्षण लक्षितं ।
चन्द्रभाङ्कित सर्व्वाङ्गं रत्न भूषण भूषितं ॥ ३२

एवं विलोक्य तद्रूपं शैलानामाधिप स्ततः।
कृताञ्जलि पुटः स्थित्वा हर्षेणा महताऽन्ततः।
स्तोत्रेनानेन तां देवीं तुष्टाव परमेश्वरीं॥ ३३

॥ हिमालय उवाच॥

मातः सर्वमयि प्रसीद परमेविश्वेशि विश्वाश्रये,
त्वं सर्वं नहि किञ्चिदस्ति भुवने वस्तुत्वदन्यत् शिवे।
त्वं विष्णु र्गिरिशस्त्वमेव नितरां धातासि शक्तिः परा:,
किं वर्ण्यं चरितं त्वचिन्त्य चरिते ब्रह्माद्यगम्यं मया॥ ३४

त्वं स्वाहाखिल देवतृप्ति जनिका तद्वत् पितृणामपि,
तृप्ते र्हेतुरसि स्वधात्वमेवजननित्वं देवदेवात्मिका।
हव्यं काव्यमपित्वमेव नियमो यज्ञस्तथा दक्षिणा,
त्वं स्वर्गादिफलं समस्त फलदे विश्वेशितुभ्यं नमः॥ ३५

रूपं सूक्ष्मतमं परात्परतरं यद्योगिनो विद्यया,
शुद्धं ब्रह्ममयं विदन्ति परया मातः सुशुद्धं तव।
वाचां दुर्विषयं मनोतिगमनं त्रैलोक्य बीजं शिवे,
भक्त्यात्वां प्रणमामि देवि वरदे विश्वेश्वरि
त्वाहिमां॥ ३६

उद्यद्भानु सहस्रभां ममगृहेजातां स्वयं लीलया,
देवीमष्टभुजां विशालनयनां बालेन्दु मौलिंशुभां।
उद्यतकोटि शशाङ्ककान्ति ममलां बालां त्रिनेत्रां
शिवां,
भक्त्याहं प्रणमामि विश्वजननी देवी
प्रसिदाम्बिके॥ ३७

रूपन्ते रजताद्रिसन्निभामलं नागेन्द्रभूषोज्वलं,
घोरं पञ्च मुखाम्बुज त्रिनयनै र्भीमैः समुद्‌
भाषितं।
चन्द्रार्काङ्कित मस्तकं धृतजटाजुटं शरण्ये शिवे,
भक्त्याहं प्रणमामि विश्वजननी त्वंमे
प्रसीदाम्बिके॥ ३८

रूपं शारद चन्द्र कोटि सदृशं दिव्याम्बरैः शोभितं,
दिव्यैराभरणै र्विराजित मलं कान्त्याजगन्मोहनं।
दिव्यै र्बाहु चतुष्टयै र्युत महं वन्दे शिवे भक्तितः,
पादाब्जं जननि प्रसीद निखिल ब्रह्मादि
देवस्तुते॥ ३८

रूपन्ते नव नीरदद्युति रुचिं फुल्लाब्जनेत्रोज्वलं,
कान्त्याविश्वविमोहनं स्मितमुखं रत्नाङ्गदैर्भूषितं।
विभ्राजद्वन मालया विलषितोरस्कं जगत्तारिणि,
भक्त्याहं प्रणतोऽस्मि देवि कृपया
दुर्गंप्रसीदाम्बिके॥ ४०

मातः किं परिवर्णितुं तवगुणं रूपञ्च विश्वात्मकं,
शक्तोदेवि जगत्त्रये बहुगुणै र्देवोथवामानुषः।
तत किं स्वल्पमति ब्रवीमि करुणां कृत्वा
स्वकीयैर्गुणैः,
नो मां मोहय मायया परमया विश्वेशि तुभ्यं
नमः॥ ४१

अद्यमे सफलं जन्म तपश्च सफलं मम।
यतस्त्वं जगतां माता मत् पुत्रीत्व मुपागता॥ ४२

धन्योऽहं कृतकृत्योऽहं मातस्त्वं निज लीलया।
नित्यापि मद्गृहे जाता पुत्री भावेन वै यतः॥ ४३
किं ब्रूमो मेनकायाश्च भाग्यं जन्मशतार्जितं।
यत स्त्रिजगतां मातुरपि माता भवत्तव॥ ४४

॥ श्रीमहादेव उवाच॥

एवं गिरीन्द्र तनया गिरिराजेन संस्तुता।
बभुव सहसाचारु रूपिणी पूर्ववन्मुने॥ ४५
मेनकापि विलोक्यैवं विस्मिता भक्तिसंयुता।
ज्ञात्वा ब्रह्ममयीं पुत्रीं प्राहगद्गदया गिरा॥ ४६

॥ मेनकोवाच॥

मातः स्तुतिं नजानामि भक्तिम्बाजगदम्बिके।
तथाप्यहमनुग्राह्या त्वयानिजगुणेन हि॥ ४७
त्वयाजगदिदं कर्म त्वमेवै तत् फलप्रदा।
सर्वाधार स्वरूपा च सर्वं व्याप्याधितिष्ठति॥ ४८

॥ श्रीदेव्युवाच॥

त्वयामातस्तथापित्रा ह्यनेनाराधिता ह्यहं।
सद्दोग्रतपसापुत्रीं लब्धुं मां परमेश्वरीं॥ ४९

सुवयो स्तपसस्तस्य फलदानाय लीलया ।
नित्याललभ्यवती जन्म गर्भेतव हिमालयात् ॥ ५०

॥ श्रीमहादेव उवाच ॥

ततो गिरीशस्तां देवीं प्रणिपत्य पुनः पुनः ।
पप्रच्छ ब्रह्मविज्ञानं प्राञ्जलि र्मुनिसत्तम ॥ ५१

॥ हिमवानुवाच ॥

मातस्त्वं बहुभाग्येन ममजातासिकन्यका ।
ब्रह्माद्यैर्दुर्लभा योगिदुर्गम्या निज लीलया ॥ ५२
अहं तवपदाम्भोजं प्रपन्नोऽस्मिमहेश्वरि ।
यथाञ्जसा तरिष्यामिसंसारापारवारिधिं ।
तथानुशाधिमातर्मां ब्रह्मविज्ञानमुत्तमं । ५३

॥ श्रीपार्वत्युवाच ॥

शृणु तात प्रवक्ष्यामि योगसारं महामते ।
यस्यविज्ञानमात्रेणदेही ब्रह्ममयोभवत् । ५४
गृहीत्वा मम मन्त्राणि सद्गुरो सुसमाहितः ।
कायेनमनसावाचामामेवहि समाश्रयेत् ॥ ५५
मच्चित्तोमद्गतप्राणोमन्नामजपतत्परः ।
मत्प्रसङ्गोमदालापोमद्गुण श्रवणेरतः ॥ ५६

भवेन्मुमुक्षू राजेन्द्र मयि भक्तिपरायनः।
मदङ्घ्रीपतिसंयुक्तमानसः साधकोत्तमः॥ ५७
पूजायज्ञादिकं कुर्य्याद्यथाविधिविधानतः।
श्रुतिस्मृत्युदितैः सम्यक् स्ववर्णाश्रमवर्णितैः॥ ५८
सर्व्वैर्यज्ञतपोदानैर्मामेवहि समर्च्चयेत्।
ज्ञानात् संजायते मुक्तिर्भक्तिर्ज्ञानस्य कारणं।
धर्म्मात् संजायते भक्तिधर्म्मोयज्ञादिकोमतः॥ ५९
तस्मान्मुमुक्षुधर्म्मार्थं ममेदं रूपमाश्रयेत्।
सर्व्वाकाराहमेवैकासच्चिदानन्दविग्रहा।
मदंशेन परिच्छिन्नादेहा स्वर्गौकिषां पितः॥ ६०
तस्मान्मामेवविध्युक्तैः सकलैरेवकर्मभिः।
विभाव्यपूजयेद्भक्त्यानान्यथाभावयेत् सुधीः॥ ६१
एवं विध्युक्तकर्म्माणिकृत्वा निर्म्मलमानसः।
तत्वज्ञान-समायुक्तोमुमुक्षुः सततं भवेत्॥ ६२
घृणां वितत्यसर्व्वत्र पुत्रमित्रादिकेष्वपि।
वेदान्तादिषु शास्त्रेषु सन्निविष्ट मनाभवेत्॥ ६३
कामादिकं त्यजेत् सर्वं हिंसाञ्चापिविवर्ज्जयेत्।
एवं कृतवतां विद्याजायतेनात्रसंशयः॥ ६४

तथैवात्मामहाराज प्रत्यक्षमनुभूयते।
तथैवजायतेमुक्तिः सत्यं सत्यं ब्रवीमिते॥ ६५
किन्त्वेतद्दुर्ल्लभं तातमद्भक्तिविमुखात्मनां।
तस्माद्भक्तिः पराकार्य्यामयियत्नान्मुमुक्षुभिः॥ ६६
त्वमप्येवं महाराज मयोक्तं कुरु सर्व्वदा।
संसारदुःखैरखिलैर्वाध्यतेनकदाचन॥ ६७

इति श्रीमहाभागवते महापुराणे प्रथमखण्डे
बाणाचन्द्रांशे श्रीभगवतीगीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे पार्वतीशैलेन्द्र
संवादे उद्देशकथनं नाम
प्रथमोऽध्याय।

# द्वितीयोऽध्यायः ।

॥ हिमालय उवाच ।

विद्यायाश्चोदृशीमातर्यतोज्ञानं प्रजायते ।
आत्मावाकिं स्वरूपञ्चतन्मेब्रूहिमहेश्वरि ॥ १

॥ श्रीपार्वत्युवाच ॥

शृणु तात प्रवक्ष्यामि या संसारनिवर्त्तिका ।
विद्या तस्याः स्वरूपन्ते कथयामि महामते ॥ २
बुद्धिप्राणमनोदेहादिन्द्रियानिपृथक्पृथक् ।
अद्वितीयश्चिदात्माहं शुद्धभाव विनिश्चितः ।
संवेत्तियेनज्ञानेन विद्यातज्ज्ञान मुच्यते ॥ ३
आत्मानिरामयः शुद्धोजन्मनाशादिवर्जितः ।
बुद्ध्याद्युपाधिरहितश्चिदानन्दात्मकोमतः ।
असङ्गः स्वप्रभः पूर्णः सत्यज्ञानादिलक्षणः ॥ ४
एकएवाद्वितीयश्च सर्व्व देहगतः परः ।
स्वप्रकाशेनदेहादीन् भासयन् स्वयमास्थितः ॥ ५

इत्यात्मनः स्वरूपन्ते गिरिराजमयोदितं ।
एवं विचिन्तयेन्नित्यमात्मानं सुसमाहितः ॥ ६
अनात्मविषयावादावात्मबुद्धिं विवर्जयेत् ।
रागद्वेषादिदोषेभ्यः सदोषं कर्मसम्भवेत् ।
ततः पुनः संसृतिश्च तस्मात्तान्परिवर्जयेत् ॥ ७

॥ हिमालय उवाच ॥

अशुभादृष्टजनका रागद्वेषादयः शिवे ।
कथंजनैः परित्यज्यास्तन्मेत्वं वक्तुमर्हसि ॥ ८
कुर्वन्तियेवापराधान् कथंतान् सहतेजनः ।
तेषुरागश्च विद्वेषः कथंवा न भवेद्धृद ॥ ९

॥ श्रीपार्वत्युवाच ॥

अपकारः कृतः कस्य तदेवाशुविचारयेत् ।
विचार्य्यमानेतस्मिंस्तुद्वेषएवनजायते ॥ १०
पञ्चभूतात्मकोदेहोजड़ोजीवप्रकाशकः ।
वह्निनादह्यतेदेहः शिवाद्यैर्वापि भक्ष्यते ।
तथापियोनजानातिकोपकारोस्तिंकस्यवै ॥ ११

आत्माशुद्धः स्वयंपूर्णः सच्चिदानन्दविग्रहः।
नजायतेनम्रियते निर्लोपो नचदुःखभाक्।
विच्छिद्यमाने देहेपि नच्छिन्तिरस्यजायते॥ १२

यथा गृहान्तरस्थस्य नभसः क्वापि न क्षतिः।
गृहेषु दह्यमानेषु गिरिराजतथैवहि॥ १३

हन्ता चेन्मन्यते हन्मिहतश्चेन्मन्यते हतः।
तावुभौ भ्रान्तमनसौनायं हन्ति नहन्यते॥ १४

स्व-स्वरूपं विदित्वैवं द्वेषं त्यक्त्वा सुखी भवेत्।
द्वेषमूलोमनस्तापो द्वेषः संसारः बन्धनं।
मोक्षावघ्न करोद्वेषः तं यत्नात् परिवर्जयेत्॥ १५

॥ हिमालय उवाच॥

देहस्यापि नचेद्देवि न जीवस्य परात्मनः।
अपकारो विद्यतेऽत्र नतौ दुःखस्य भागिनौ॥ १६

तत् कस्य जायते दुःखं यत साक्षादनुभूयते।
अन्योवाकोऽस्ति देहेस्मिन् दुःखभोक्ता महेश्वरि।
एतन्मे ब्रूहि तत्वेन यदितेमय्यनुग्रहः॥ १७

॥ श्रीपार्वत्युवाच ॥

नैव दुःखंहि देहस्य नात्मनोपि परात्मनः।
तथापि जीवोनिर्लिपो मोहितो मम मायया ॥ १८

सुखमहं दुःखहचापि स्वयमेवाभिमन्यते।
अनाद्यविद्या सा माया जगन्मोहनकारिणी ॥ १९

जात मात्रं हि सम्बन्धस्तया संजायते पितः।
संसारोजायते तेन रागद्वेषादि संकुलः ॥ २०

आत्मास्वलिङ्गन्तु मनः परिगृह्य महामते।
तत् क्षतान् सञ्चयान् कामान् संसारे वर्त्तते
वश्यः ॥ २१

विशुद्ध शुभ्र स्फटिको यद्वद्रक्तादि योगतः।
तत्तद्रूपयुतो भाति वस्तुतो नास्ति रञ्जनं।
बुद्धीन्द्रियादिसामीप्यादात्मनोपि तथागतिः ॥ २२

मनोबुद्धि रहङ्कारोजीवस्य सहकारिणः।
स्वकर्म वशत स्तात फल भोक्तार एव ते ॥ २३

सर्वं वैषयिकं तात सुखं वा दुःखमेव वा।
तत्र वभुञ्जते ह्यात्मा निर्लिप्तः प्रभुरव्ययः ॥ २४

सृष्टिकाले पुनः पूर्व वासना मानसैः सह।
जायते जीव एवं हि रमेताद्भुत संभवं ॥ २५

ततोऽज्ञानं विचारेण त्यक्त्वामोहं विचक्षणः।
सुखीभवेन्महाराज इष्टानिष्टोपपत्तिषु ॥ २६

देहमूलो मनस्तापो देहः संसार कारणं।
देहः कर्मसमुत्पन्नः कर्मचद्विविधं मतं ॥ २७

पापं पुण्यञ्च राजेन्द्र तयोर्वशानुसारतः।
देहिनः सुख दुःखञ्च दुर्लङ्घ्यं दिनरात्रिवत् ॥ २८

स्वर्गादिकामः कृत्वापि पुण्यं कर्मविधानतः।
प्राप्यस्वर्गंपतत्याशु भूयोः कर्म-प्रचोदितः ॥ २९

तस्मात्तत् सङ्गतिं कृत्वाविद्याभ्यासपरायणः।
विमुक्त देहः परमं सुखमिच्छेद्विचक्षणः ॥ ३०

इति श्रीमहाभागवते महापुराणे प्रथम खण्डे
ऋतुचन्द्रांशे श्रीभगवतीगीता सूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे पार्व्वती
शैलेन्द्र संवादे स्वरूप-कथनं
नाम द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ।

॥ हिमालय उवाच ॥

दुःखस्य कारणं देहः पञ्चभूतात्मकः शिवे ।
यतस्तद्विरहे देवी नदुःखै परिभूयते ॥ १

सोयं संजायते मातः कथं देहोमहेश्वरि ।
क्षीण-पुन्यः कथंजीवोजायतेच पुनर्भुवि ।
तद्ब्रूहि विस्तरेणाशु यदिते मय्यनुग्रहः ॥ २

॥ श्रीपार्वत्युवाच ॥

क्षितिर्जलं तथातेजो वायुराकाश मेवच ।
एभिः पञ्चभि रावद्धो देहोयं पाञ्च भौतिकः ॥ ३

प्रधाना पृथिवी तत्र शेषानां सहकारिता ।
उक्तश्चतुर्विधः सोयं गिरिराज निबोध मे ॥ ४

अण्डजः स्वेदजश्चैव उद्भिज्जश्च जरायुजः ।
अण्डजः पक्षि सर्पाद्याः स्वेदजामशकादयः ॥ ५

वृक्षगुल्म प्रभृतयोह्युद्भिज्जाश्च विचेतनाः ।
जरायुजामहाराज मानुषाः पशवस्तथा ॥ ६

शुक्र शोनित सम्भूतो देहोज्ञेयो जरायुजः ।
भूयः सत्रिविधोज्ञेयः पुंस्त्री क्लीव प्रभेदतः ॥ ७

शुक्राधिक्येन पुरुषोभवेत् पृथ्वीधराधिप ।

रजोधिक्येभवेन्नारीतयोः साम्येनपुंसकं।
स्वकर्म्मवशतोजीवोनिजाहारं प्रकल्पते ॥ ८
पतित्वाधरणीपृष्ठे ब्रीहि मध्यगतो भवेत्।
स्थित्वातत्र चिरं भूयो युज्यते पुरुषैस्ततः ॥ ९
ततः प्रविष्टं तद्भोग्यं पुंसोदेहात प्रजायते।
रेतस्तेजसजीवोपि भवेद्रेतोगतस्तथा ॥ १०
ततस्त्रियाभियोगेन ऋतुकाले महामते।
रेतसासहितः सोपिमातुगर्भं प्रयातिहि ॥ ११
ऋतु स्नाताविशुद्धेयत चतुर्थेहनि तद्दिनात्।
आषोड़शदिनं राजन् ऋतुकाल उदाहृतः ॥ १२
जायतेच पुमां स्तत्र युग्मके दिवसे पितः।
अयुग्मे दिवसेनारी जायते पुरुषर्षभ ॥ १३
ऋतुस्नातातु कामार्त्ता मुखं यस्य समीक्षते।
तदाकृतिः सन्ततिः स्यात्तत् पश्येद्भर्त्तुराननं ॥ १४
तद्रेतो योनि रक्तेन मुक्तं भूयान्महामते।
दिने नैकेन कल्लोलं जरायु परिवेष्टितं ॥ १५
भूत्वापंचदिनेनैव बुद्बुदाकार तामियात्।
यातुचर्म्मावृतिः सूक्ष्माजरायु र्सनिगद्यते ॥ १६

शुक्रशोणितयो योगस्तस्मिन् संजायते यतः ।
तत्र गर्भे भवेद्यस्मात तेन प्रोक्ता जरायुजः ॥ १७
ततस्तु सप्तरात्रेण मांसपेशित्वमागतः ।
पक्ष मात्रेण सापेशीतच्छोनित परिप्लुता ॥ १८
ततश्चाङ्कुर उत्पन्नः पञ्चविंशति रात्रेषु ।
स्कन्धग्रीवाशिरः पृष्ठोदराणिच महामते ॥ १९
पंचधाङ्गानिजायन्ते एवं मासेन चक्रमात् ।
द्वितीयेमासि जायन्ते पाणिपादादयस्तथा ॥ २०
अङ्गानां सन्धयः सर्वे तृतीये संभवन्तिहि ।
अङ्गुल्यश्चापि जायन्ते चतुर्थे मासि सर्वतः ॥ २१
अभिव्यक्तिश्चजीवस्य तस्मिन्नेवहि जायते ।
ततश्चलति गर्भोपिजनन्याजठरेस्थितः ॥ २२
नेत्रेकर्णौतथा नासा जायन्ते मासि पंचमे ।
तत्रापिच नखश्रेणी मुखं तस्य प्रजायते ॥ २३
पायुर्मेढ्रमुपस्थंच कर्णच्छिद्रद्वयन्तथा ।
जायन्ते मासिषष्ठेतुनाभिश्चापिभवेन्नृप ॥ २४
जायन्ते सप्तमेकेशास्तथालोमानि चाष्टमे ।
विभक्तावयवत्वंच जायते गर्भमध्यतः ॥ २५

विन्दते खश्च दन्तादीन् जन्मान्तर समुद्भवान्।
समस्तावयवा एवं जायन्ते क्रमतः पितः॥ २६
नवमेमासि जीवस्तु चैतन्यं सर्व्वशोलभेत्।
मातृभक्तानुसारेण वर्द्धते जठरे स्थितः॥ २७
प्राप्यापि यातनां घोरां म्रियतेन स्वकर्म्मणा।
स्मृत्वा प्राक्तन देहोत्थकर्म्माणि बहुदुःखितः॥ २८
मनसा वचनं ब्रूतेविचार्य्य स्वयमेवहि।
एवं दुःख मनु प्राप्य भूयो जन्म लभन्त्वितौ॥ २९
अन्यायेनार्ज्जितं वित्तं कुटुम्बभरणं कृतं।
नाराधितो भगवतीं दुर्गां दुर्गति हारिणीं॥ ३०
यद्यस्मान्निष्कृतिर्म्मे स्यात गर्भदुःखात्तदापुनः।
विषयंनानुवर्त्तिष्ये विनादुर्गां महेश्वरीं॥ ३१
नित्यं तामेवभक्त्यार्ह पूजयें यत मानसः।
वृथा कलत्रपुत्रादि वासना वशगोऽसकृत्॥ ३२
विनष्ट संसारमनाः कृतवानात्मनोहितं।
तस्येदानीं फलं भुंक्ते गर्भवास दुरासदं॥ ३३
नानुभूय करिष्यामि वृथा संसारसेवनं।
इत्येवं बहुधादुःख मनुभूय स्वकर्म्मतः॥ ३४

अस्थियन्त्रविनिस्पिष्टः पतितः कुक्षिवर्त्मना ।
सूति वात वशाद्घोर नरकादिवपातकी ॥ ३५
मेदोऽसृकप्लुत सर्वाङ्गोजरायु परिसंवृतः ।
सुव्यक्तं वचनं तावत् वक्तुं वालैर्नशक्यते ॥ ३६
ततोमन्मायययासुग्धस्तानिदुःखानिविस्मृतः ।
अकिंचित करतां प्राप्य मांसपिण्डइव स्थितः ॥३७
सुषुम्नापिहितानाड़ी श्लेषलायावदेवहि ।
सुव्यक्तं वचनंतावद्वक्तुं वालैर्नशक्यते ॥ ३८
नगन्तुमपिशक्नोति वन्धुभिः परिरक्षितः ।
यथेष्टं भाषते वाक्यं गच्छत्यपिसुदूरतः ॥ ३९
श्वमार्ज्जारादि दंष्ट्रिभ्यो हृमःकालवशात्ततः ।
ततश्च यौवनोद्रिक्तः कामक्रोधादिसंयुतः ॥ ४०
कुरुते विविधं कर्म्म पापपुण्यात्मकं पितः ।
कुरुते धर्म्मकर्म्मादि देहभोगार्थ मेवहि ॥ ४१
सदेहः पुरुषाद्भिन्नः पुरुषः किं समश्नुते ।
प्रतिक्षणां क्षरत्यायुस्त्वलत् प्रात्वोदकं यथा ॥ ४२
स्वप्नोदयं महाराज सर्व्वं वैषयिकं सुखं ।
तथापि नभवेद्दानिरभिमानस्य देहिनः ॥ ४३

अवतद्दीच्चते देहीमोहितो मम मायया।
वीच्चते केवलान् भोगान् शाश्वतानशाश्वतान् ॥४४
अकस्मादग्रसते कालः पूर्णायुषि भूधर।
यथाऽहिरन्तिकं प्राप्तं मण्डूकं ग्रसते चणात् ॥४५
दुःखेन यज्जन्मविफलं जातमेवहि।
एवं जन्मान्तरमपिनिष्फलं जायते तथा ॥ ४६
निष्कृति र्जायते नैवविषयाननु सेविनां।
तस्माज्ज्ञानविचारेणात्यक्ता वैष यकं सुखं। ४७
संस्मृत्य गर्भवासादि दुःखं वैराग्यवान भवेत।
तदैवजायते भक्तिर्म्मयिब्रह्मणि निश्चला ॥ ४८
देहादिभ्यः पृथक्कृत्वानिश्चित्यात्मान मात्मना।
देहादिममतां मिथ्याज्ञानजातां परित्यजेत् ॥४९
पितस्त्वं यदि संसार दुःखाविहन्ति मिच्छसि।
तदाराधयमांज्ञात्वाब्रह्मरूपां समाहितः ॥ ५०
इति श्रीमहाभागवते महापुराणे शैलचन्द्रांशे
श्रीभगवतीगीता सूपनिषतसु ब्रह्मविद्यायां
योगशास्त्रे पार्व्वती शैलेन्द्र संवादे
देहोत्पत्तिकथनं नाम तृतीयोऽध्यायः ॥

# चतुर्थोऽध्यायः ।

॥ हिमालय उवाच ॥

अनाश्रितानां त्वां देविमुक्तिस्त्वेनैवविद्यते ।
कथं समाश्रयेत् त्वां तत् कृपयाब्रूहिमे शिवे ॥ १
सध्यायकीदृशं रूपं मातस्तव मुमुक्षुभिः ।
त्वयिभक्तिः पराकार्य्यादेहबन्धविमुक्तये ॥ २

॥ श्रीपार्व्वत्युवाच ॥

मनुष्याणां सहस्रेषुकश्चिद्यततिसिद्धये ।
तेषामपि सहस्रेषु कश्चिन्मां वेत्तितत्वतः ॥ ३
रूपं मेनिष्कलं सूक्ष्मं वाचातीतं सुनिर्म्मलं ।
निर्गुणं परमं ज्योतिः सर्व्वव्यापक कारणं ॥ ४
निर्विकल्पं निरालम्बं सच्चिदानन्द विग्रहं ।
ध्येयं मुमुक्षुभिस्तात देहबन्धविमुक्तये ॥ ५
अहं मतिमतां तात सुमतिः पर्व्वताधिप ।
पृथिव्यां पुण्यगन्धोहं रसोप्सु शशिनि प्रभा ॥ ६

तपस्विनां तपश्चास्मि तेजश्चास्मिविभावसौ।
कामरागादिरहितं बलिनां बलमस्म्यहं॥ ७
सर्व्वं कर्मसु राजेन्द्रकर्म्म पुण्यात्मकं तथा।
छन्दसामस्मिगायत्री बीजानां प्रणवोस्म्यहं॥ ८
धर्म्माविरुद्ध: कामोऽस्मि सर्व्वभूतेषुभूधर।
एवमन्येपि येभावा: सात्विका राजसास्तथा॥ ९
तामसा मत्त उत्पन्ना मदधीनाश्च तेमयि।
नाहं तेषामधीनास्मि कदाचित् पर्व्वतर्षभ॥ १०
एवं सर्व्वगतं रूप मदैशं परमव्ययं।
नजानन्ति महाराज मोहिता:मममायया॥ ११
ये भजन्तिचमां भक्त्या मायामेनां जगत्प्रसूं।
तरन्ति स्वात्मनोरूपं द्रष्टुयं स्वेच्छया पित:॥ १२
ज्ञातं द्विधानगश्रेष्ठ स्त्री पुमानितिभेदत:।
शिव: प्रधान: पुरुष: शक्तिश्च परमाशिवा॥ १३
शिव शक्त्यात्मकं ब्रह्मयोगिनस्तत्वदर्शिन:।
वदन्तिमां महाराज स्वतएवपरात्परं॥ १४
सृजामि ब्रह्मरूपेण जगदेतत् चराचरं।
संहरामि महारुद्र रूपेणाशुनिजेच्छया॥ १५

दुष्टक्षत्रशमनार्थाय विष्णुः परम पुरुषः।
भूत्वाजगदिदं कृत्स्नं पालयामि महाचल ॥ १६
अवतीर्य्यक्षितौ भूयोभूयोरामादिरूपतः।
निहत्य दानवान् पृथ्वीं पालयामि महामते ॥ १७
रूपं शक्त्यात्मकं तातप्रधानं तत्वच स्मृतं।
यतस्तयाविनापुंसः कार्य्यानर्हत्वमिष्यते ॥ १८
रूपान्येतानि राजेन्द्र तथाकाल्यादिकानिच।
स्थूलानि सूक्ष्मरूपं मे पुराप्रोक्तं तवानघ ॥ १९
अनभिध्यान रूपन्तु स्थूलं पर्व्वत पुङ्गव।
अगम्यं सूक्ष्मरूपं मे यद्दृष्ट्वामोक्षभाग्भवेत् ॥ २०
तस्मात् स्थूलं हि मे रूपं मुमुक्षुः पूर्व्वमाश्रयेत्।
क्रियायोगेनतान्येकं समभ्यर्च्च विधानतः।
शनैरालोकयेत् सूक्ष्मं रूपं मे परमव्ययं ॥ २१

॥ हिमालय उवाच ॥

मातर्बहुविधं रूपं स्थूलं तव महेश्वरि।
तेषुकिं रूपमासाद्य सहसामोक्षभाग्भवेत्।
तन्मेब्रूहिमहादेवि यदिते मय्यनुग्रहः ॥ २२

॥ श्रीपार्वत्युवाच ॥

मयाप्राप्तमिदं विश्वं स्थूलरूपेण सुधर।
तत्राराध्यतमा देवी मूर्त्तिः शीघ्र विमुक्तिदा ॥ २३

सापि नानाविधा तत्र महाविद्या महामते।
विमुक्तिदा महाराज तासां नामानि वै शृणु ॥ २४

महाकाली महातारा षोड़शी भुवनेश्वरी
भैरवी वगला छिन्ना महात्रिपुर सुन्दरी ॥ २५

धूमावती च मातङ्गी नृणां मोक्षफलप्रदा।
तासु कुर्वन् परांभक्तिं मोक्षमाप्नोत्य संशयः ॥ २६

आसामन्यतमं तात क्रियायोगेनचाश्रितः।
मय्यर्पित मनोबुद्धिर्मामेवैस्यसि निश्चितं ॥ २७

मामुपेत्य पुनर्जन्म दुःखालय मशाश्वतं।
न लभन्ति महात्मानः कदाचिदपि भूधरः ॥ २८

अनन्यचेताः सततं योमां स्मरति नित्यशः।
तस्याहं मुक्तिदा राजन् भक्तियुक्तस्य योगिनः ॥ २९

यस्तुसंस्मृत्य मामन्ते प्राणान् त्यजति भक्तितः।
सोपि संसार दुःखैर्घैर्वाध्यते न कदाचन ॥ ३०

अनन्यचेतसोयेमां भजन्ते भक्तिसंयुता:।
तेषां भक्तिप्रदा नित्यमहमस्मिमहामते ॥ ३१

शक्त्यात्मकं हि मे रूपमनायासेनमुक्तिदं।
समाश्रय महाराज ततोमोक्षमवापस्यसि ॥ ३२

येप्यन्यदेवतां भक्त्यायजन्ते श्रद्धयान्विता:।
तेऽपिमामेवराजेन्द्र यजन्तेनात्र संशय:।
अहं सर्वमयीयस्मात् सर्वयज्ञफलप्रदा ॥ ३३

किन्त्वन्यथैव ये भक्तास्तेषां मुक्ति: सुदुर्लभा।
ततोमामेव शरणं देह बन्ध विमुक्तये ॥ ३४

याहिसंयतचेतास्त्वं मामेष्यसि न संशय:।
यत् करोसि यदश्नासि यज्जुहोसि ददासि यत् ॥ ३५

सर्व्वं मदर्पणं कृत्वा मोक्ष्यसे भवबन्धनात्।
ये मां भजन्तिमद्भक्तामयि ते तेषुचाप्यहं ॥ ३६

ममनास्तिप्रिय: कश्चिदप्रियोवामहामते।
अपिचेत् सुदुराचारोभजतेमामनन्यभाक् ॥ ३७

सोपिपापविनिर्म्मुक्तोमुच्यते भवबन्धनात्।
क्षिप्रं भवतिधर्म्मात्मा शनैस्तरतिसोपिच ॥ ३८

अयिभक्तिमतां मूक्तिरलङ्घापर्व्वताधिप ।
ततस्त्वं परया भक्त्या मामुपेत्य महामते ॥ ३९
मन्मनाभवमद्याजीनमस्कुरु च मत्परः ।
मामेवैष्यसि संसार दुःखैर्नैवहि वाध्यसे ॥ ४०
इति श्रीमहाभागवते महापुराणे प्रथमखण्डे
सिद्धि चन्द्रांशे श्रीभगवतीगीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे पार्वती शैलेन्द्र
संवादे भक्तियोगो नाम चतुर्थोऽध्याय

# पञ्चमोऽध्यायः ।

॥ श्रीमहादेव उवाच ॥

एवं श्रीपार्वतीवक्त्राद्योगसारं परंमुने ।
निशम्यपर्वतश्रेष्ठोजीवन्मुक्तोबभूवह ॥ १
सापीयं शैलराजाय योगमुक्त्वा महेश्वरी ।
मातुस्तनं पपौबाला प्राकृतेवहिलीलया ॥ २
गिरिन्द्रस्तुततोहर्षाच्चकार सुमहोत्सवं ।
यथानदृष्टं केनापिश्रुतं वा केनचिद्क्वचित् ॥ ३
षष्ठेह्निषष्ठीं संपूज्यसंप्राप्ते दशमेहनि ।
पार्वतीं चाकरोन्नामसान्वयं पर्वताधिपः ॥ ४
एवं त्रिजगतां मातानित्याप्रकृतिरुत्तमा ।
सम्भूयमेनकागर्भाद्धिमालयगृहेस्थिता ॥ ५
हिमालयायपार्वत्याकथितं योगमुत्तमं ।
प्रातः पठेत् सदा मुक्तिस्तस्य नारद जायते ॥
तुष्टाभगवती नित्यं सर्वमङ्गलदायिनी ।
जायतेच दृढ़ा भक्तिः पार्वत्यां मुनिपुङ्गव ॥ ७

अष्टम्यां च चतुर्द्दश्यां नवम्यां भक्ति संयुतः।
पठन् श्रीपार्वती गीतां जीवन्मुक्तोभवेन्नरः॥ ८
शरत्काले महाष्टम्यां यः पठेत् समुपोषितः।
रात्रौ जागरितो भुत्वा तस्यपूण्यं ब्रवीमिकिं॥ ९
सर्व्वदेवैः सुपूज्यश्चदुर्गाभक्ति परायणः।
इन्द्रादयोलोकपालास्तदाज्ञावशवर्त्तिनः॥ १०
स्वयं देवीकलामेतिसाक्षाद्देव्याः प्रसादतः।
नश्यन्तितस्यपापानिब्रह्महत्यादिकान्यपि॥ ११
पुत्रं सर्व्वगुणोपेतं लभते चिरजीविनं।
नश्यन्तिविपदस्तस्य नित्यं प्राप्नोति मङ्गलं॥ १२
अमावस्यातिथिं प्राप्य यः पठेद्भक्तिसंयुतः।
सर्वपापविनिर्म्मूक्तः सदुर्गातुल्यतामियात्॥ १३
निशीथेपठते यस्तु विल्वबृक्षस्य सन्निधौ।
तस्य सम्वत् सराद्दुर्गास्वयं प्रत्यक्षतामियात्॥ १४
किमेवबहुनोक्तेन शृणु नारद तत्वतः।
अस्याः पाठसमं पुण्यं नास्त्येवपृथिवीतले॥ १५
तपतीर्थव्रतदानादिकर्म्मणामिहविद्यते।
फलस्य संख्यानैतस्याविद्ये मुनिपुङ्गव॥ १६

इत्युक्तास्ते यथाजातानित्यापि परमेश्वरी।
लीलया मेनकागर्भे किं भूयः श्रोतुमिच्छसि ॥ १७

इति श्रीमद्भागवते महापुराणे प्रथमखण्डे
रन्ध्रचन्द्रांशे श्रीभगवतीगीता सूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे पार्वती
शैलेन्द्र संवादे माहात्म्य कथनं
नाम पंचमोऽध्याय।

ॐ तत् सत्।

इति श्रीभगवतीगीता समाप्ता।